# परमार्थसारम् (अभिनवगुप्तस्य)

https://sa.wikisource.org/s/aiz

**अभिनवगुप्तेनकृतं परमार्थसारम्**

परं परस्थं गहनाद् अनादिम् एकं निविष्टं बहुधा गुहासु ।
सर्वालयं सर्वचराचरस्थं त्वाम् एव शम्भुं शरणं प्रपद्ये ॥ १

गर्भाधिवासपूर्वकमरणान्तकदुःखचक्रविभ्रान्तः ।
आधारम् भगवन्तं शिष्यः पप्रच्छ परमार्थम् ॥ २ ॥

आधारकारिकाभिः तं गुरुर् अभिभाषति स्म तत्सारम् ।
कथयत्य् अभिनवगुप्तः शिवशासनदृष्टियोगेन ॥ ३ ॥

निजशक्तिवैभवभराद् अण्डचतुष्टयम् इदं विभागेन ।
शक्तिर् माया प्रकृतिः पृथ्वी चेति प्रभावितं प्रभुणा ॥ ४ ॥

तत्रान्तर् विश्वम् इदं विचित्रतनुकरणभुवनसंतानम् ।
भोक्ता च तत्र देही शिव एव गृहीतपशुभावः ॥ ५ ॥

नानाविधवर्णानां रूपं धत्ते यथामलः स्फटिकः ।
सुरमानुषपशुपादपरूपत्वं तद्वद् ईशोऽपि ॥ ६ ॥

गच्छति गच्छति जल इव हिमकरबिम्बं स्थिते स्थितिं याति ।
तनुकरणभुवनवर्गे तथायम् आत्मा महेशानः ॥ ७ ॥

राहुर् अदृश्योऽपि यथा शशिबिम्बस्थः प्रकाशते तद्वत् ।
सर्वगतोऽप्य् अयम् आत्मा विषयाश्रयणेन धीमुकुरे ॥ ८ ॥

आदर्शे मलरहिते यद्वद् वदनं विभाति तद्वद् अयम् ।
शिवशक्तिपातविमले धीतत्त्वे भाति भारूपः ॥ ९ ॥

भारूपं परिपूर्णं स्वात्मनि विश्रान्तितो महानन्दम् ।
इच्छसंवित्करणैर् निर्भरितम् अनन्तशक्तिपरिपूर्णम् ॥ १० ॥

सर्वविकल्पविहीनं शुद्धं शान्तं लयोदयविहीनम् ।
यत् परतत्त्वं तस्मिन् विभाति षट्त्रिंशदात्म जगत् ॥ ११ ॥

दर्पणबिम्बे यद्वन् नगरग्रामादिचित्रम् अविभागि ।
भाति विभागेनैव च परस्परं दर्पणाद् अपि च ॥ १२ ॥

विमलतमपरमभैरवबोधात् तद्वद् विभागशून्यम् अपि ।
अन्योन्यं च ततोऽपि च विभक्तम् आभाति जगद् एतत् ॥ १३ ॥

शिवशक्तिसदाशिवताम् ईश्वरविद्यामयीं च तत्त्वदशाम् ।
शक्तीनां पञ्चानां विभक्तभावेन भासयति ॥ १४ ॥

परमं यत् स्वातन्त्र्यं दुर्घटसंपादनं महेशस्य ।
देवी मायाशक्तिः स्वात्मावरणं शिवस्य इतत् ॥ १५ ॥

मायापरिग्रहवशाद् बोधो मलिनः पुमान् पशुर् भवति ।
कालकलानियतिबलाद् रागाविद्यावशेन संबद्धः ॥ १६ ॥

अधुनैव किंचिद् एवेदम् एव सर्वात्मनैव जानामि ।
मायासहितं कञ्चुकषट्कम् अणोर् अन्तरङ्गम् इदम् उक्तम् ॥ १७ ॥

कम्बुकम् इव तण्डुलकणविनिविष्टं भिन्नम् अप्य् अभिदा ।
भजते तत् तु विशुद्धिं शिवमार्गौन्मुख्ययोगेन ॥ १८ ॥

सुखदुःखमोहमात्रं निश्चयसंकल्पनाभिमानाच् च ।
प्रकृतिर् अथान्तःकरनं बुद्धिमनोऽहंकृतिक्रमशः ॥ १९ ॥

श्रोत्रं त्वगक्षिरसना घ्राणं बुद्धीन्द्रियाणि शब्दादौ ।
वाक्पाणिपादपायूपस्थं कर्मेन्द्रियाणि पुनः ॥ २० ॥

एषां ग्राह्यो विषयः सूक्ष्मः प्रविभागवर्जितो यः स्यात् ।
तन्मात्रपञ्चकं तत् शब्दः स्पर्शो महो रसो गन्धः ॥ २१ ॥

एतत्संसर्गवशात् स्थूलो विषयस् तु भूतपञ्चकताम् ।
अभ्येति नभः पवनस् तेजः सलिलं च पृथ्वी च ॥ २२ ॥

तुष इव तण्डुलकणिकाम् आवृणुते प्रकृतिपूर्वकः सर्गः ।
पृथ्वीपर्यन्तोऽयं चैतन्यं देहभावेन ॥ २३ ॥

परम् आवरणं मल इह सूक्ष्मं मायादिकञ्चुकं स्थूलम् ।
बाह्यं विग्रहरूपं कोशत्रयवेष्टितो ह्य् आत्मा ॥ २४ ॥

अज्ञानतिमिरयोगाद् एकम् अपि स्वं स्वभावम् आत्मानम् ।
ग्राह्यग्राहकनानावैचित्र्येणावबुध्येत ॥ २५ ॥

रसफाणितशर्करिकागुडखण्डाद्या यथेक्षुरस एव ।
तद्वद् अवस्था भेदाः सर्वे परमात्मनः शम्भोः ॥ २६ ॥

विज्ञानान्तर्यामिप्राणविराड्देहजातिपिण्डान्ताः ।
व्यवहारमात्रम् एतत् परमार्थेन तु न सन्त्य् एव ॥ २७ ॥

रज्ज्वां नास्ति भुजङ्गस् त्रासं कुरुते च मृत्युपर्यन्तम् ।
भ्रान्तेर् महती शक्तिर् न विवेक्तुं शक्यते नाम ॥ २८ ॥

तद्वद् धर्माधर्मस्वर्निरयोत्पत्तिमरणसुखदुःखम् ।
वर्णाश्रमादि चात्मन्य् असद् अपि विभ्रमबलाद् भवति ॥ २९ ॥

एतत् तद् अन्धकारं यद् भावेषु प्रकाशमानतया ।
आत्मानतिरिक्तेष्व् अपि भवत्य् अनात्माभिमानोऽयम् ॥ ३० ॥

तिमिराद् अपि तिमिरम् इदं गण्डस्योपरि महान् अयं स्फोटः ।
यद् अनात्मन्य् अपि देहप्राणदाव् आत्ममानित्वम् ॥ ३१ ॥

देहप्राणविमर्शनधीज्ञाननभःप्रपञ्चयोगेन ।
आत्मानम् वेष्टयते चित्रं जालेन जालकार इव ॥ ३२ ॥

स्वज्ञानविभवभासनयोगेनोद्वेष्टयेन् निजात्मानम् ।
इति बन्धमोक्षचित्रां क्रीडां प्रतनोति परमशिवः ॥ ३३ ॥

सृष्टिस्थितिसंहारा जाग्रत्स्वप्नौ सुषुप्तम् इति तस्मिन् ।
भान्ति तुरीये धामनि तथापि तैर् नावृतं भाति ॥ ३४ ॥

जाग्रद् विश्वं भेदात् स्वप्नस् तेजः प्रकाशमाहात्म्यात् ।
प्राज्ञः सुप्तावस्था ज्ञानघनत्वात् ततः परं तुर्यम् ॥ ३५ ॥

जलधरधूमरजोभिर् मलिनीक्रियते यथा न गगनतलम् ।
तद्वन् मायाविकृतिभिर् अपरामृष्टः परः पुरुषः ॥ ३६ ॥

एकस्मिन् घटगगने रजसा व्याप्ते भवन्ति नान्यानि ।
मलिनानि तद्वद् एते जीवाः सुखदुःखभेदजुषः ॥ ३७ ॥

शान्ते शान्त इवायं हृष्टे हृष्टो विमोहवति मूढः ।
तत्त्वगणे सति भगवान् न पुनः परमार्थतः स तथा ॥ ३८ ॥

यद् अनात्मन्य् अपि तद्रूपावभासनं तत् पुरा निराकृत्य ।
आत्मन्य् अनात्मरूपां भ्रान्तिं विदलयति परमात्मा ॥ ३९ ॥

इत्थं विभ्रमयुगलकसमूलविच्छेदने कृतार्थस्य ।
कर्तव्यान्तरकलना न जातु परयोगिनो भवति ॥ ४० ॥

पृथिवी प्रकृतिर् माया त्रितयम् इदं वेद्यरूपतापतितम् ।
अद्वैतभावनबलाद् भवति हि सन्मात्रपरिशेषम् ॥ ४१ ॥

रशनाकुण्डलकटकं भेदत्यागेन दृश्यते यथा हेम ।
तद्वद् भेदत्यागे सन्मात्रं सर्वम् आभाति ॥ ४२ ॥

तद् ब्रह्म परं शुद्धं शान्तं अभेदात्मकं समं सकलम् ।
अमृतं सत्यं शक्तौ विश्राम्यति भास्वरूपायाम् ॥ ४३ ॥

इष्यत इति वेद्यत इति संपाद्यत इति च भास्वरूपेण ।
अपरामृष्टं यद् अपि तु नभःप्रसूनत्वम् अभ्येति ॥ ४४ ॥

शक्तित्रिशूलपरिगमयोगेन समस्तम् अपि परमेशे ।
शिवनामनि परमार्थे विसृज्यते देवदेवेन ॥ ४५ ॥

पुनर् अपि च पञ्चशक्तिप्रसरणक्रमेण बहिर् अपि तत् ।
अण्डत्रयं विचित्रं सृष्टं बहिरात्मलाभेन ॥ ४६ ॥

इति शक्तिचक्रयन्त्रं क्रीडायोगेन वाहयन् देवः ।
अहम् एव शुद्धरूपः शक्तिमहाचक्रनायकपदस्थः ॥ ४७ ॥

मय्य् एव भाति विश्वं दर्पण इव निर्मले घतादीनि ।
मत्तः प्रसरति सर्वं स्वप्नविचित्रत्वम् इव सुप्तात् ॥ ४८ ॥

अहम् एव विश्वरूपः करचरनादिस्वभाव इव देहः ।
सर्वस्मिन् अहम् एव स्फुरामि भावेषु भास्वरूपम् इव ॥ ४९ ॥

द्रष्टा श्रोता घ्राता देहेन्द्रियवर्जितोऽप्य् अकर्तापि ।
सिद्धान्तागमतर्कांश् चित्रान् अहम् एव रचयामि ॥ ५० ॥

इत्थं द्वैतविकल्पे गलिते प्रविलङ्घ्य मोहिनीं मायाम् ।
सलिले सलिलं क्षीरे क्षीरम् इव ब्रह्मणि लयी स्यात् ॥ ५१ ॥

इत्थं तत्त्वसमूहे भावनया शिवमयत्वम् अभियाते ।
कः शोकः को मोहः सर्वं ब्रह्मावलोकयतः ॥ ५२ ॥

कर्मफलं शुभम् अशुभं मिथ्याज्ञानेन संगमाद् एव ।
विषमो हि सङ्गदोषस् तस्करयोगोऽप्य् अतस्करस्येव ॥ ५३ ॥

लोकव्यवहारकृतां य इहाविद्याम् उपासते मूढाः ।
ते यान्ति जन्ममृत्यू धर्माधर्मार्गलाबद्धाः ॥ ५४ ॥

अज्ञानकालनिचितं धर्माधर्मात्मकं तु कर्मापि ।
चिरसंचितम् इव तूलं नश्यति विज्ञानदीप्तिवशात् ॥ ५५ ॥

ज्ञानप्राप्तौ कृतम् अपि न फलाय ततोऽस्य जन्म कथम् ।
गतजन्मबन्धयोगो भाति शिवार्कः स्वदीधितिभिः ॥ ५६ ॥

तुषकम्बुककिंशारुकमुक्तं बीजं यथाङ्कुरं कुरुते ।
नैव तथाणवमायाकर्मविमुक्तो भवाङ्कुरं ह्य् आत्मा ॥ ५७ ॥

आत्मज्ञो न कुतश्चन बिभेति सर्वं हि तस्य निजरूपम् ।
नैव च शोचति यस्मात् परमार्थे नाशिता नास्ति ॥ ५८ ॥

अतिगूढहृदयगञ्जप्ररूढपरमार्थरत्नसंचयतः ।
अहम् एवेति महेश्वरभावे का दुर्गतिः कस्य ॥ ५९ ॥

मोक्षस्य नैव किंचिद् धामास्ति न चापि गमनम् अन्यत्र ।
अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः ॥ ६० ॥

भिन्नाज्ञानग्रन्थिर् गतसंदेहः पराकृतभ्रान्तिः ।
प्रक्षीणपुण्यपापो विग्रहयोगेऽप्य् असौ मुक्तः ॥ ६१ ॥

अग्न्यभिदग्धं बीजं यथा प्ररोहासमर्थताम् एति ।
ज्ञानाग्निदग्धम् एवं कर्म न जन्मप्रदं भवति ॥ ६२ ॥

परिमितबुद्धित्वेन हि कर्मोचितभाविदेहभावनया ।
सङ्कुचिता चितिर् एतद्देहध्वंसे तथा भाति ॥ ६३ ॥

यदि पुनर् अमलं बोधं सर्वसमुत्तीर्णबोद्धृकर्तृमयम् ।
विततम् अनस्तमितोदितभारूपम् सत्यसंकल्पम् ॥ ६४ ॥

दिक्कालकलनविकलं ध्रुवम् अव्ययम् ईश्वरं सुपरिपूर्णम् ।
बहुतरशक्तिव्रातप्रलयोदयविरचनैककर्तारम् ॥ ६५ ॥

सृष्ट्यादिविधिसुवेधसम् आत्मानं शिवमयं विबुध्येत ।
कथम् इव संसारी स्याद् विततस्य कुतः क्व वा सरणम् ॥ ६६ ॥

इति युक्तिभिर् अपि सिद्धं यत्कर्म ज्ञानिनो न सफलं तत् ।
न ममेदम् अपि तु तस्येति दार्ढ्यतो न हि फलं लोके ॥ ६७ ॥

इत्थं सकलविकल्पान् प्रतिबुद्धो भावनासमीरणतः ।
आत्मज्योतिषि दीप्ते जुह्वज् ज्योतिर्मयो भवति ॥ ६८ ॥

अश्नन् यद् वा तद् वा संवीतो येन केनचिच् छान्तः ।
यत्र क्वचन निवासी विमुच्यते सर्वभूतात्मा ॥ ६९ ॥

हयमेधशतसहस्राण्य् अपि कुरुते ब्रह्मघातलक्षाणि ।
परमार्थविन् न पुण्यैर् न च पापैः स्पृश्यते विमलः ॥ ७० ॥

मदहर्षकोपमन्मथविषादभयलोभमोहपरिवर्जी ।
निःस्तोत्रवषट्कारो जड इव विचरेद् अवादमतिः ॥ ७१ ॥

मदहर्षप्रभृतिर् अयं वर्गः प्रभवति विभेदसंमोहात् ।
अद्वैतात्मविबोधस् तेन कथं स्पृश्यतां नाम ॥ ७२ ॥

स्तुत्यं वा होतव्यं नास्ति व्यतिरिक्तम् अस्य किंचन च ।
स्तोत्रादिना स तुष्येन् मुक्तस् तन् निर्नमस्कृतिवषट्कः ॥ ७३ ॥

षट्त्रिंशत्तत्त्वभृतं विग्रहरचनागवाक्षपरिपूर्णम् ।
निजम् अन्यद् अथ शरीरं घटादि वा तस्य देवगृहम् ॥ ७४ ॥

तत्र च परमात्ममहाभैरवशिवदेवतां स्वशक्तियुताम् ।
आत्मामर्शनविमलद्रव्यैः परिपूजयन्न् आस्ते ॥ ७५ ॥

बहिरन्तरपरिकल्पनभेदमहाबीजनिचयम् अर्पयतः ।
तस्यातिदीप्तसंविज्ज्वलने यत्नाद् विना भवति होमः ॥ ७६ ॥

ध्यानम् अनस्तमितं पुनर् एष हि भगवान् विचित्ररूपाणि ।
सृजति तद् एव ध्यानं संकल्पालिखितसत्यरूपत्वम् ॥ ७७ ॥

भुवनावलीं समस्तां तत्त्वक्रमकल्पनाम् अथाक्षगणम् ।
अन्तर्बोधे परिवर्तयति च यत् सोऽस्य जप उदितः ॥ ७८ ॥

सर्वं समया दृष्ट्या यत् पश्यति यच् च संविदं मनुते ।
विश्वश्मशाननिरतां विग्रहखट्वाङ्गकल्पनाकलिताम् ॥ ७९ ॥

विश्वरसासवपूर्णं निजकरगं वेद्यखण्डककपालम् ।
रसयति च यत् तद् एतद् व्रतम् अस्य सुदुर्लभं च सुलभं च ॥ ८० ॥

इति जन्मनाशहीनं परमार्थमहेश्वराख्यम् उपलभ्य ।
उपलब्धृताप्रकाशात् कृतकृत्यस् तिष्ठति यथेष्टम् ॥ ८१ ॥

व्यापिनम् अभिहितम् इत्थं सर्वात्मानं विधूतनानात्वम् ।
निरुपमपरमानन्दं यो वेत्ति स तन्मयो भवति ॥ ८२ ॥

तीर्थे श्वपचगृहे वा नष्टस्मृतिर् अपि परित्यजन् देहम् ।
ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥ ८३ ॥

पुण्याय तीर्थसेवा निरयाय श्वपचसदननिधनगतिः ।
पुण्यापुण्यकलङ्कस्पर्शाभावे तु किं तेन ॥ ८४ ॥

तुषकम्बुकसुपृथक्कृततण्डुलकणतुषदलान्तरक्षेपः ।
तण्डुलकणस्य कुरुते न पुनस् तद्रूपतादात्म्यम् ॥ ८५ ॥

तद्वत् कञ्चुकपटलीपृथक्कृता संविद् अत्र संस्कारात् ।
तिष्ठन्त्य् अपि मुक्तात्मा तत्स्पर्शविवर्जिता भवति ॥ ८६ ॥

कुशलतमशिल्पिकल्पितविमलीभावः समुद्गकोपाधेः ।
मलिनोऽपि मणिर् उपाधेर् विच्छेदे स्वच्छपरमार्थः ॥ ८७ ॥

एवं सद्गुरुशासनविमलस्थिति वेदनं तनूपाधेः ।
मुक्तम् अप्य् उपाध्यन्तरशून्यम् इवाभाति शिवरूपम् ॥ ८८ ॥

शास्त्रादिप्रामाण्याद् अविचलितश्रद्धयापि तन्मयताम् ।
प्राप्तः स एव पूर्वं स्वर्गं नरकं मनुष्यत्वम् ॥ ८९ ॥

अन्त्यः क्षणस् तु तस्मिन् पुण्यां पापां च वा स्थितिं पुष्यन् ।
मूढानां सहकारीभावं गच्छति गतौ तु न स हेतुः ॥ ९० ॥

येऽपि तदात्मत्वेन विदुः पशुपक्षिसरीसृपादयः स्वगतिम् ।
तेऽपि पुरातनसंबोधसंस्कृतास् तां गतिं यान्ति ॥ ९१ ॥

स्वर्गमयो निरयमयस् तद् अयं देहान्तरालगः पुरुषः ।
तद्भङ्गे स्वौचित्याद् देहान्तरयोगम् अभ्येति ॥ ९२ ॥

एवं ज्ञानावसरे स्वात्मा सकृद् अस्य यादृग् अवभातः ।
तादृश एव तदासौ न देहपातेऽन्यथा भवति ॥ ९३ ॥

करणगणसंप्रमोषः स्मृतिनाशः श्वासकलिलता च्छेदः ।
मर्मसु रुजाविशेषाः शरीरसंस्कारजो भोगः ॥ ९४ ॥

स कथं विग्रहयोगे सति न भवेत् तेन मोहयोगेऽपि ।
मरणावसरे ज्ञानि न च्यवते स्वात्मपरमार्थात् ॥ ९५ ॥

परमार्थमार्गम् एनं झटिति यदा गुरुमुखात् समभ्येति ।
अतितीव्रशक्तिपातात् तदैव निर्विघ्नम् एव शिवः ॥ ९६ ॥

सर्वोत्तीर्णं रूपं सोपानपदक्रमेण संश्रयतः ।
परतत्त्वरूढिलाभे पर्यन्ते शिवमयीभावः ॥ ९७ ॥

तस्य तु परमार्थमयीं धाराम् अगतस्य मध्यविश्रान्तेः ।
तत्पदलाभोत्सुकचेतसोऽपि मरणं कदाचित् स्यात् ॥ ९८ ॥

योगभ्रष्टः शास्त्रे कथितोऽसौ चित्रभोगभुवनपतिः ।
विश्रान्तिस्थानवशाद् भूत्वा जन्मान्तरे शिवीभवति ॥ ९९ ॥

परमार्थमार्गम् एनं ह्य् अभ्यस्याप्राप्य योगम् अपि नाम ।
सुरलोकभोगभागी मुदितमना मोदते सुचिरम् ॥ १०० ॥

विषयेषु सार्वभौमः सर्वजनैः पूज्यते यथा राजा ।
भुवनेषु सर्वदेवैर् योगभ्रष्टस् तथा पूज्यः ॥ १०१ ॥

महता कालेन पुनर् मानुष्यं प्राप्य योगम् अभ्यस्य ।
प्राप्नोति दिव्यम् अमृतम् यस्माद् आवर्तते न पुनः ॥ १०२ ॥

तस्मात् सन्मार्गेऽस्मिन् निरतो यः कश्चिद् एति स शिवत्वम् ।
इति मत्वा परमार्थे यथा तथापि प्रयतनीयम् ॥ १०३ ॥

इदम् अभिनवगुप्तोदितसंक्षेपं ध्यायतः परं ब्रह्म ।
अचिराद् एव शिवत्वं निजहृदयावेशम् अभ्येति ॥ १०४ ॥

आर्याशतेन तद् इदं संक्षिप्तं शास्त्रसारम् अतिगूढम् ।
अभिनवगुप्तेन मया शिवचरणस्मरणदीप्तेन ॥ १०५ ॥